# शैशिरीय शिक्षा

हरिः श्रीगणपतये नमः अविघ्नमस्तु
गजाननाय श्रीशाय सर्वविघ्नप्रणाशिने
नमो गणेशरूपाय विष्णवे दशबाहवे

जगत्संभूतिसंरक्षा संहारैकविनोदिने
नमो भगवते तस्मै चिदानन्दाय विष्णवे

मुद्गलो गालवो गार्ग्यः शाकल्यः शैशिरस्तथा
पञ्चैते शौनकाः शिष्याः शाखाभेदप्रवर्तकाः

शैशिरस्य तु शिष्यस्य शाकटायन एव च
सर्वज्ञं सर्वकर्तारमाचार्यं तु प्रणम्य च

शैशिरोऽहं प्रवक्ष्यामि शाखाया लक्षणं विधिम्
त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः संभवतो मताः

प्राकृते संस्कृते वापि स्वयं प्रोक्ताः स्वयंभुवा
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः

यादयश्च स्मृता ह्यष्टौ चत्वारस्तु यमाः स्मृताः
अनुस्वारो विसर्गश्च ळकारश्च तथैव च

दुस्पृष्टश्चेति विज्ञेयो नासिक्यं रङ्गमुच्यते
उच्चारणविशेषेणात्राक्षराश्रयमुच्यते

द्विविधं वर्णजातं हि स्वरो व्यञ्जनमेव च
अकारादिः स्वरो ज्ञेयः कादि व्यञ्जनमुच्यते

द्विविधश्च स्वरो ज्ञेयो नासिक्यः सानुनासिकः

उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा

कादीनां पञ्चवर्गाश्च स्पर्शा इति हि संज्ञिताः
दुस्पृष्टश्चेति विज्ञेयो डढयोः स्वरमध्ययोः

वर्गाणां प्रथमा वर्णा द्वितीया ऊष्मसंज्ञिताः
हकारवर्ज्याश्चाघोषाः शिष्टं घोषवदुच्यते

नासिक्याः पञ्चमा वर्णा अनुस्वारस्तथैव च
चत्वारस्तु यमाः प्रोक्ता अव्यक्ताः सानुनासिकाः

चतस्रो यादयोन्तस्था नासिक्या अप्यरेफिकाः
ऊष्माणः शादयश्चैव चत्वार इति कीर्तिताः

जिह्वामूलीय इत्युक्त उपध्मानीय एव च
कपाश्रितोष्मजातौ च विसर्गस्य च संभवौ

ह्रस्वो दीर्घः प्लुत इति स्वराः कालेन संज्ञिताः
सन्ध्यक्षराणां कालश्च दीर्घःप्लुतो न मात्रिकः

उच्चारणविशेषेणात्राक्षराश्रयमुच्यते
व्यञ्जनं त्वर्धमात्रं स्यात् स्वरभक्तिस्तथैव च

संयोगे पादमात्रा स्यात् स्वरभक्तिः प्रकीर्त्यते
ह्रस्वात् परस्त्वनुस्वारस्त्रिपादः परिकीर्तितः

स च ह्रस्वस्त्रिपादः स्याद् द्वावेतौ सममात्रिकौ
दीर्घात् परस्त्वनुस्वारः पादमात्रः प्रकीर्तितः

स च दीर्घः सपादः स्याद्वर्णकालो निगद्यते
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा

जिह्वामूलं च दन्ताश्च नासिकोष्टौ च तालु च
अकुहाः कण्ठजाः प्रोक्ता उपध्मानीय ओष्ठजः

उपू ओष्ट्यौ विजानीयाद्वो दन्त्योष्टयस्तथैव च
ए ऐ तु कण्ठतालव्यौ ओ औ कण्ठोष्ठजौ स्मृतौ

स्पर्शानां करणं स्पृष्टमन्तस्थास्वीषदुच्यते
स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्

संवृतं चेत्यकारस्य सर्ववर्णो निगद्यते
उच्चारणविशेषेणात्राक्षराश्रयमुच्यते

अनुस्वारे विवृत्यन्ते विरामे चाक्षरद्वये
ओवर्णे च उवर्णे च पवर्गे च पृथक् पृथक्

ओ औ उवर्ण इत्येषामनुस्वारपवर्गयोः
विरामे च विवृत्तौ च मध्ये च व्यञ्जनद्वये

द्विरोष्ठौ तु विगृह्णीयाद्वकारे त्वधरं तथा
सुऊतयो भ्रातुः पुत्रान्धेनुं सोमः
प्र सुष्टुतिः यन्मयोभु उदीरय पुपुष्वान्
मोष्टवो असमा बभूवुः श्वो वोचेमहीत्येतादृशं निदर्शनम्

ओ औ उवर्ण इत्येषां व्यञ्जनस्य च संगतौ
सकृदोष्टौ विगृह्णीयान्नान्यश्चेन्मध्यगः स्वरः

द्विषो युयोतु यूयुविरित्येतत्तन्निदर्शनम्
कतवा यत्र दृश्यन्ते सन्धिस्थानेषु नित्यशः

स्ववर्गेण नियुक्ताश्च वीरन्तत्रैव कारयेत्
हिङ्कृण्वती तत्ते भद्रं गां भजन्त निदर्शनम्

स्पर्शानां पञ्चमैर्योगे भवन्तीह यमाः स्मृताः
अयः पिण्डेन तत्तुल्यं घनबन्धाः प्रकीर्तिताः

सः पलिक्नीरग्निर्यज्ञं पत्निर्विघ्न दध्मात्मानं
पाप्माजगृभ्मागृभ्णामित्येतन्निदर्शनम्

स्पर्शास्त्वपञ्चमाश्चैवमन्तस्थाभिश्च संयुताः
दारुपिण्डेन तत्तुल्यं श्लथबन्धाः प्रकीर्तिताः

शत्रुं सख्यमग्र्यं कृच्छ्रं क्व वज्रं यज्वा राष्ट्रयति
प्लायोगिर्विद्भिर्मेढ्रंवाध्र्यश्चेति निदर्शनम्

वकारस्तु नकारेण णकारेण च संयुतः
श्लथबन्धः स विज्ञेयो दुस्पृष्टश्चात्र चोच्यते

भूरिदाव्नः एवयाव्नः प्रातर्याव्णः दधिक्राव्णः
ईळे द्यावापृथिवीमीळ्हे सप्तिरित्यत्र तु निदर्शनम्

संयोगे शषसाः पूर्वे परं चेदनुनासिकम्
ऊर्णापिण्डेन तत्तुल्यं श्लथबन्धाः प्रकीर्तिताः

अश्नोतु विष्णुर्घृतस्नूकार्ष्मेवेति निदर्शनम्
परस्परस्तु संयोगः स्पर्शानां संभवेद्यदि

तत्पूर्वस्य श्रुतिर्नास्ति विरामे व्यञ्जनस्य च
वाग्देवीविट् कुलाद्विभ्राड् बृहदारैक् पन्थाम्
यद्घ्नन् त्रिष्टुब्गायत्री अस्मादनुष्टुबिति निदर्शनम्

नकारान्तं पदं पूर्वं यवकारे परे पदे
असंयुतं तु विज्ञेयमुभयोर्व्यक्तिरिष्यते

संयुतौ यवकारौ चेदृकारः परतो यदि
संयुतं त्वत्रविज्ञेयं नोभयोर्व्यक्तिरिष्यते
अनुस्वारस्वराद्यस्तु संयोगादिर्द्विरुच्यते

ऊष्मा चेत्प्रथमौ ज्ञेयौ लात् स्पर्शो रपरस्तथा
त्वं श्रद्धाभीरथं स्वस्ति वज्रमग्रमात्वारथं

आद्राभ्यामीध्यस्व विभ्वीस्सहस्कृत
कश्छन्दसां पश्चात् सुष्टुभस्तिष्ठन्ति शुल्काकस्तदस्ता

दिवस्परि शुल्का उल्कामिव गल्दयामर्च्चतिवर्ध-
न्तान्दितं पुनर्यन्धपूर्वमैर्थश्च तदत्र तु निदर्शनम्

यद्यूष्मानुपधो युक्तः स चेद्यन्तस्थया पुनः
तस्यैव क्रमणं कार्यं श्यावाः स्वाहा श्रिये ह्वये

नटाभ्यां से परे मध्ये तकारः संप्रजायते
नतयोर्ले चवर्गे च सवर्णः स्यात् परस्य तु

त एवादुकहेमञ्च वृत्तश्चाकारः श्रूयते
आपः क्षिप्तं च यच्छब्दं प्रथमोच्चारणलक्षणम्

ससवान्त्सन्त्स्तूयसे विराट्त्सम्राट् यस्मिँल्लोके
नृञ्ज्ञातैरिति तल्लोकमस्माच्चेति निदर्शनम्

अनन्त्याः प्रथमा वर्णा घोषसंज्ञे परे स्थिते
वर्णा द्वितीयानुच्यन्ते उच्यन्ते वर्णवेदिभिः

द्वयोः पादुकहेमञ्च वृत्तश्चाकार श्रूयते
आपः क्षिप्तं च यच्छब्दं द्वितीयोच्चारणलक्षणम्

वृख्षे वृख्षे संवथ्सरं त्वान्थ्सारि तमफ्सन्त चमथ्सरः
मथ्स्यपायीत्येतत्तु निदर्शनम्

यथासौ मत्तमातङ्गः पदात्पदमवक्रमी
एवं पदं पदस्यान्ते दर्शनीयं पृथक् पृथक्

रलौ स्वराद् यत्र पूर्वा ऊष्मसंज्ञे परे स्थिते
पूर्वस्वरस्य संभाव्या स्वरभक्तिः प्रकीर्त्यते

अदर्शि शीर्षा अग्निर्होता सर्सृते च न जळ्हवः
शतवल्शोऽर्षा णोऽर्षन्नेतदत्र निदर्शनम्

व्यञ्जनान्तेषु युक्तेषु सैव स्यात् पादमात्रिका
शीर्ष्णःशीर्ष्णः प्रसर्स्राणः तर्ह्येवैतन्निदर्शनम्

स्वरभक्तिं प्रयुञ्जानः त्रीन् दोषान् परिवर्जयेत्
इकारं चाप्युकारं च ग्रस्तदोषन्तथैव च

यकाररेफावित्येता वृकारेण च संयुतौ
ओष्ठौ तत्र न कंप्येते क्षिप्रमेतत्प्रचक्षते

प्र कृतान्यृजीषिणः वज्रयृचीषमः शम्यृक्वाणः
निर्ऋथन् निर्ऋतेश्चापि निदर्शनमितीदृशम्

विसर्जनीयस्य यदा कपयोः परतः स्थितिः
न संहितायां भवत ऊष्मजातौ परिग्रहे

ज्योतिष्कृद्यातं छर्दिष्पाविममञ्जस्पामुभये
हविष्कृतं पथस्पथ इत्यत्र तु निदर्शनम्

नीचैः स्वरोऽनुदात्तः स्यादुच्चैश्चोदात्त उच्यते

स्वरितं तत्समाहारस्तदैक्यं प्रचयः स्मृतः

अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उच्यते
स्वरितः कर्णमूलीयः सर्वस्मिन् प्रचयस्तथा

इमं मे गंगे यमुने सरस्वति निदर्शनम्
उदात्तश्चानुदात्तश्च स्वरितश्च तथैव च

लक्षणं वर्णयिष्यामि दैवतं रथानमेव च
शुक्लमुच्चं विजानीयात् नीचं लोहितमुच्यते

श्यामं तु स्वरितं विद्यादग्निरुच्चस्य देवता
नीचे सोमं विजानीयात् स्वरिते सविता तथा

उदात्तं ब्राह्मणं विद्यान्नीचं क्षत्रियमुच्यते
वैश्यं तु स्वरितं विद्यादुदात्तन्तु भरद्वसुः

नीचं गौतममित्याहुर्गार्ग्यं तु स्वरितं विदुः
विद्यादुदात्तं गायत्रं नीचं त्रैष्टुभमुच्यते

जागतं स्वरितं विद्यादेतदेव नियोगतः
मध्ये तु कंपयेत् कंपमुभौ पार्श्वौ समौ भवेत्

द्विगुणं वर्णकालाच्च पादः कंपार्थ इष्यते
अनुदात्तमुपादाय स्वरितं ह्यवलंबयेत्

पुनर्निहतमागच्छेद् एष कंपविधिः स्मृतः
क्व१वोऽश्वा युजानो३ऽस्माभिस्त्वां ही३न्द्रेति निदर्शनम्

सरङ्गं कम्पयेत् कम्पं रथीवेति निदर्शनम्
उदात्तः पूर्वभागस्तु परभागो निहन्यते

उदात्तकम्प इत्युक्तः कुत्रचिच्चापि दृश्यते
शचीऽपतिन्तनूऽनपात्स्थानान्न निदर्शनम्

क्रमकाले रथानान्न संहितावन्न कंपयेत्
नीचस्वरितमेवात्र एष कम्पविधिः स्मृतः

स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः
नाभ्याहन्यान्न निर्हन्यान्न गायेन्न च कम्पयेत्

यथैवोच्चारयेद्वर्णांस्तथैवैतान् समापयेत्
निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयन्

सममुच्चारयेद्वर्णान् हस्तेन च मुखेन च
स्वरश्चैव तु हस्तश्च द्वयन्त युगपद् भवेत्

हस्ताद् भ्रष्टः स्वराद् भ्रष्टो न वेदफलमश्नुते
न करालो न लंबोष्ठो नाव्यक्तोनानुनासिकः

गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति
प्रकृतिर्यस्य कल्याणी दन्तोष्ठौ यस्य शोभनौ

प्रगल्भश्च विनीतश्च स वर्णान् वक्तुमर्हति
यथा व्याघ्री हरेत् पुत्रान् दंष्ट्राभिर्न च पीडयेत्

भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत्
संहितानयते सूर्यं पदानि शशिनः पदम्

क्रमो विनयते सूर्यं यत्तं पदमनामयम्
हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्

ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति

हस्तेनाधीयमानश्च स्वरवर्णान् प्रयोजयेत्

ऋग्यजुःसामभिः पूतो ब्रह्मलोकं समश्नुते
यथा वाणी तथा पाणी रिक्तन्तु परिवर्जयेत्

यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति
उच्चौ निषादगन्धारौ नीचावृषभधैवतौ

शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः
उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिष्टमूर्धा
अन्त्ये च मध्ये च स्वरितं धृतश्च कनिष्ठिकायामनुदात्तमेव

आकाशस्था यथा विद्युत्स्फटिके मणिसूत्रवत्
एष छेदो विवृत्तीनां यथामात्रविचक्षणः
वत्सानुसृतार्धमात्रा तथा वत्सानुसारिणी

पाकवत्युभयोर्ह्रस्वा दीर्घमध्या पिपीलिका
प्र व एकोऽर्वाञ्चो अद्यरथं हिरण्यप्रउगम्

धृतव्रता आदित्याश्चैतत्तत्र निदर्शनम्
स्वरभक्तिं प्रयुञ्जानस्त्रीन् दोषान् परिवर्जयेत्

इकारं चाप्युकारं च ग्रस्तदोषं तथैव च
न च स्वरति पूर्वाङ्गे नापराङ्गे कथं चन

न स्वरे न च मात्रायां कथं स्वारो विधीयते
पराङ्गस्य तु यत् पूर्वे पूर्वाङ्गस्य तु यत् परम्

उभयार्धार्धसंयोगे स्वारं कुर्याद्विचक्षणः
दुर्बलस्य यथा राष्ट्रं हरेत्तद् बलवान्नृपः

दुर्बलं व्यञ्जनं तद्वद्धरेद् बलवान् स्वरः
मात्रिकं वा द्विमात्रं वा स्वर्यते यदिहाक्षरम्

तस्यान्ततोर्धमात्रां वै मात्राधिक्यं तथैव सा
ओभावश्च विवृत्तिश्च शषसा रेफ एव च

जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः
यद्योभावप्रसन्धानमुकारादि परं पदम्

स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः
स्वराः कम्पाश्च रङ्गाश्च ये यत्कालाः स्वभावतः

वर्धन्ते प्रोच्यमानास्ते क्षिप्रयत्ने विवक्तरि
यकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूत्तरः

आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः
पादादौ च पदादौ च संयोगावग्रहेषु च

जः शब्द इति विज्ञेयो अन्यत्र य इति स्मृतः
एकमक्षरमेतच्च च पदान्तवत्

माधुर्यं च न चाव्यक्तं व्यक्तं च न च पिण्डयेत्
सनाथस्येव देशस्य न वर्णास्संकरं गताः

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः
अनर्थज्ञोल्पकण्ठश्च षडेते पाठकाधमाः

माधुर्यमक्षरव्यक्तं पदव्यक्तं तु सुस्वरम्
धैर्यं लघुसमायुक्तं षडेते पाठके गुणाः

राक्षेति प्रथमो ज्ञेयः ख्ना इत्यपरो भवेत्

यमास्तत्र निवर्तन्ते श्मशानादिव बान्धवाः

प्रथमोत्तमवर्गीये वर्ग्यान्त्यैस्सह संगते
नासिक्यं गुरुमुच्चार्यं यमस्थानगतं वदेत्

नादस्तु श्रूयते घोषाद्विरामाद् द्वित्वतस्तथा
अनासिक्योऽथ नासिक्यो जायते वर्णरूपतः

दध्यङ् ह परमे व्योमन् वीर्यं चेति निदर्शनम्
नकारस्य पदान्तस्य स्वरे रेफो विधीयते

लोपस्त्वाकारपूर्वस्य सशौ तु तचयोः परे
सखी ँर्यान् उत् पणी ँर्हतम्

तादृशं रञ्जयेदङ्गं सर्वं नासिक्यसंगतम्
लाक्षारक्तं यथा तोयं नकाराङ्गस्वरं तथा

सर्वरङ्गं विजानीयाद्बन्धूँ रिति निदर्शनम्
हृदयादुत्थितं रङ्गं कांस्येन समसुस्वरम्

मात्रिकं च द्विमात्रं च जघन्वाँ इति निदर्शनम्
यथा सौराष्ट्रिका नारी तक्राँ इत्यभिधीयते

एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव श्वेदया
लुप्ते नकारे यत् स्वरं रञ्जन्ति शौनकादयः
आदिसर्वरङ्गमिति प्रोक्तं न त्वा भीरिव विन्दतीँ३

सप्त स्वरान् प्रवक्ष्यामि तेषामेव तु लक्षणम्
जात्यः क्षैप्रोभिनिहितस्तैरोव्यञ्जन एव च
जात्यः स्वरः सजात्येन श्रुष्ट्यग्ने क्षैप्र उच्यते

तेऽवर्धन्ताभिनिहितस्तैरोव्यञ्जन ऊतये
तिरोविरामो विष्कभिते प्रश्लिष्टो हीन्द्रगिर्वणः

पादवृत्तः क ईं वेद स्वरास्सप्तैवमादयः
जात्यादिः पादवृत्तान्तः स्वरितश्च स्वरास्त्रयः

उदात्तः पूर्वसन्धौ  यो नीचैरभिपदे स्थितः
अनुदात्तः परः शेषः शाकलाद्यैः प्रचोदितः

तस्यैवोदात्तश्रवणं कम्पस्थानेऽर्धमात्रकम्
कृत्रिमे तु पदान्ताद्योर्बहुधा ऋक्षु भिद्यते

लोपागमविकारादि विशेषेण त्वृचि क्रमात्
यत्र त्रिंशत् समाम्नातास्संयोग उपयोगिनः

वर्णा ऋग्वेद आचार्यैः स्पर्शान्तस्थोष्मभेदतः
त्रीणि त्रिषु त्रिधातूनि यत् किञ्चिदुपरि श्रुतम्

अन्तरिक्षं पुरीष्यं च एतद्विवृतलक्षणम्
बहिश्श्रितः पृथग्दृशश्चकदृषिर्वृषबः बृहन्त्रिषु
वर्षाण्येतत् संवृतलक्षणम्

स्पर्शाणां तु सह स्पर्शैः संयोगो यो भवेन्मिथः
पूर्वस्य सन्धृतिर्वक्त्रे न तु तस्येष्यते श्रुतिः

परस्परं तु संयोगः स्पर्शानां संभवेद्यदि
तत्पूर्वस्य श्रुतिर्नास्ति विरामे व्यञ्जनस्य च

ककुद्मान् यद्घ्नन्भिनद्मीत्यत्र दार्णस्य सन्धृतिः
अग्निः पलिक्नीः श्वघ्नीव ध्रियन्ते गकघाक्षराः
वाग्देवी वाक्पूता विट्कुलाद्विभ्राड्बृहदारैक्

पन्थां यद्घ्नन् त्रिष्टुब्गायत्र्यर्वाक् षळस्मादनुष्टुबिति
निदर्शनम्

स्पर्शास्त्वपञ्चमाश्चैवं स्पर्शानां संभवेद्यदि
स्वतृतीयानवाप्यन्ते पञ्चमे पञ्चमस्तथा

वर्गादिर्यत्पदान्तः स्यात् परयोस्त्रिचतुर्थयोः
स्वतृतीयमवाप्नोति अन्तस्थाभिश्च संयुतः

वर्गाणां प्रथमो वर्णः पञ्चमे सार्ववर्णिके
उदये पञ्चमस्य स्यात् न चकारः पदान्तगः

अर्वाग्देवा विभ्राड्बृहत् बृहद्भिर्वाजैस्त्रिष्टुब्भिः
अर्वाग्रथं सम्राड्विभ्वीर्गोमद्यूयमुद्रेभञ्च

अर्वाङ् नराविराण् मित्रावरुणयोः श्रमन्नोत
त्रिककुम्निवर्तदिति चाप्यत्र तु निदर्शनम्

पदान्तीयाच्च वर्गादेर्हकारो यः परो भवेत्
पूर्वस्यैव चतुर्थो यो हकारस्तं समाप्नुयात्

प्रथमं तु हकारश्च तच्चतुर्थमवाप्यते
स्वतृतीयमवाप्नोति पूर्ववर्णस्तथा हि सः

ऋधग्धुवेमसम्राड्ढन्ताकद्धनूनं त्रिष्टुब्भिताः
चकारो न पदान्तोस्ति अतोसौ नोपदिश्यते

मकारस्य पदान्तस्य रेफोष्मसु परेषु च
अनुस्वारो भवत्येव पदमध्यगतेष्वपि

त्वं रथं तं हिन्वन्ति त्वं शुक्रस्य तां सु ते कीर्तिम्

समानोदयोदर्कं षष्ठेऽहनिमांसमेकः पिंशति चक्षूंषि मंहिष्ठो
मत्सदेतदत्र निदर्शनम्

स्ववर्गपञ्चमश्चैव स्पर्शेषु विषयेषु च
अन्तस्थासु च ता एव मकारस्य विधिः स्मृतः

अन्त्यस्थाने मकारोऽयं पूर्वः स्पर्शे पदान्तगः
उदये तत्सवर्णः स्यात् सर्वस्मिन्ननुनासिकः
इदं कवेरिमाङ्कनामि तङ्गीर्भिर्नकिष्टङ्घ्नन्ति

य ईञ्चकार तं जानंस्तन्त्वा तान्देवास् तां धेनुम्
शन्नस्त्वं पवित्रे वामं बृहस्पते चिद्यंभगं

अन्तस्थासु परास्वेवमन्तस्थां सानुनासिकाम्
रेफं विना यामाप्नोति तामेव या परा ततः

यँ युजमिमल्ँलोगन्तव इति निदर्शनम्
नकारोऽपि लकारे तं लकारं सानुनासिकम्

यो जिगीवाल्ँलक्षमाददित्यत्र तु निदर्शनम्
त कारस्तु पदान्तीयस्तावेव लजयोर्भवेत्

अङ्गादङ्गाल्लोम्नोलोम्नः यज्ञातवेदेति च
ङ नौ यौ तौ पदान्तीयौ ह ष कारे परे पदे

हषौ शुद्धौ ततो ब्रूयाच्छुद्धार्याकौ ङनौ
दध्यङ्हार्वाङ्हवामहे देवान् हुवेम महान् ह्यस्य

वातान् ह्यश्वान् दन् षळक्षमित्यत्र तु निदर्शनम्
नकारोपधहकारो यत्र यत्र विभाव्यते

नकारश्रवणं कृत्वा हकारं सन्धयेत् पुनः
नकारोपधषकारो यत्र यत्र च दृश्यते

नकारश्रवणं कृत्वा षकारं सन्धयेत् पुनः
ङकारान्तं पदं पूर्वं हकारे परतः स्थिते

ङकारश्रवणं कृत्वा हकारं सन्धयेत् पुनः
कृत्रिमे तु पदान्ताद्योः बहुधा ऋक्षु भिद्यते

लोपागमविकारादि विशेषेण त्वृचि क्रमात्
यत्र त्रिंशत् समाम्नाताः संयोग उपजीविनः

वर्णा ऋग्वेद आचार्यैः स्पर्शान्तस्थोष्मभेदतः
टकारान्तान्नकारान्तात्सकारादि परं पदम्

तत्रान्तरे तथौ स्यातां विराट्त्सम्राट् ससवान्त्सन्
चञजेषु नकारस्य ञकारः प्रतिजायते

मित्रैरूञ्जोदप्रवृद्धो जहि शूर शत्रूञ्जामिम्
ङकारान्तं पदं पूर्वं सकाराद्युत्तरं यदि

पतेत्तत्र ककारोऽन्तः प्रत्यङ्क् स विश्वेति यथा
ङशयोस्तु पदान्ताद्योः ककारस्त्वन्तरे भवेत्

अर्वाङ्क्शश्वत्तमन्नच्छत्वं पृथग्भावमिवोच्चरेत्
पदाद्वर्गप्रथमान्ताद्यदि शादि परं पदम्

शकारश्छत्वमाप्नोति अर्वाक्छफाविव तच्छंयोः
विपाट्छुतुद्री त्रिष्टुप्छेष इत्यत्र तु निदर्शनम्

नकारान्तं पदं पूर्वं शकाराद्युत्तरं यदि

स नकारो ञकारः स्याच्चकारश्चान्तरा भवेत्

घनेव वज्रिञ्छ्नथिह्यमित्रानिति निदर्शनम्
पदान्तस्य विसर्गस्य शषसेषूदयेषु च

ततः स्वद्वित्वमाप्नोति प्रकृतिश्च विधीयते
कखयोः परयोस्य क्वचिदूष्मा भवेत्ततः

ते तु पिण्डकृताः स्पर्शा ये कण्ठ्याः स्वरसंयुताः
सर्वेषां चोदाहरणं पूर्वोक्तं श्रूयतामिदम्

यथा योक्त्रेण संवेष्ट्य तृणं बध्नन्ति वाहकाः
एवं वेष्ट्य यकारेण वैदिकं पिण्डमुच्यते

वाध्र्यश्च सुपित्र्य वध्र्यश्वस्य सुमित्र्याः रान्द्र्या
त्र्यम्बकं कृतान्यृजीषिणः सध्र्यग्घ्यृतूंश्च
तौग्र्यः वज्र्यचीषमैष्ट्यृक्वाद्र्वन्नः
अशत्र्व१र्योरात्र्युषसेस्यृषिकृत्
जिह्वाग्रीयफलितमृकारद्वयसंयुतम्
एकीकृत्योच्चारणीयन्निस्सन्धिं वर्त्तिवर्तुलम्
प्रान्तर्ऋषयो निर्ऋत्या निर्ऋतिं निर्ऋथं सचन्ताम्
अग्निर्पूर्वेभिर्ऋषिभिराविर्ऋजीक ऋतूँर्ऋतुपते गीर्भिर्ऋणो
दुर्हणायूञ्जर्हषाणो जर्हषन्त मतिर्हृदः
पत्नीर्हषितं ज्योतिर्हृदयं च निदर्शनम्

हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्
उच्चारणीयमौरस्यमेवमीप्सन्ति बह्वृचाः

ह्लादुनीञ्च ह्वयाम्यग्निं ह्लादिके ह्लादिकावति
महान् ह्यस्य ब्रह्मब्रह्माह्नाह्नेति निदर्शनम्

स्थानं कालो विकारश्च संवृतं विवृतागमौ
ईषत् स्पृष्टमघोषत्वं स्वरः कम्पस्तथोष्मता

घोषानासिक्यनासिक्या वर्णधर्मास्तु देवताः
यावन्तो यत्र ये धर्मास्तावन्तस्तत्र तान् विदुः

चतुर्मात्रस्तु षण्मात्रः प्रणवः कीर्त्यते बुधैः
पूर्वे स्वरो परो नादः सममात्रः प्रकीर्तितः

अनुदात्तः स्वरो ज्ञेय उदात्तो नाद उच्यते
लक्षणं प्रणवस्येदं प्रणवो ब्रह्म कीर्त्यते

तैलधारामिवाच्छिन्नां दीर्घघण्टानिनादवत्
अवाग्जं प्रणवस्याग्रं यस्तं वेद स वेदवित्

त्रिस्थानं च त्रिमात्रं च त्रिब्रह्म च त्र्यक्षरम्
त्रिमात्रादर्धमात्राच्च यस्तं वेद स वेदवित्

वेदो हि वर्णसंघातो वेदो ब्रह्मेति कीर्त्यते
तस्मात्तद्वेदवर्णज्ञो ब्रह्मलोके महीयते
छन्दः पादौ ज्योतिषं नेत्रयुग्मं
हस्तौ कल्पः श्रोत्रयुग्मं निरुक्तम्
शिक्षा घ्राणं व्याकरणं तथास्यं
वेदात्मने विष्णवेऽस्मै नमोऽस्तु

विष्णुं षडङ्गेन्द्रियमादिदेवं
वेदात्मानं पुरुषं विश्वरूपम्
सञ्चिन्त्य देवं पठते द्विजो यः
स याति विष्णोः परमं पदं तत्   ओं

इति शैशिरीयशिक्षा समाप्ता